## प्रकाशकर्तुः परिचयः

जयन्ति ते ब्रह्ममुखात् प्रसूतास्तपोपवासाभिषवैश्च पूताः ।
तपोधना ब्रह्मविदः प्रभूता ये रामराज्ये सुखिनो वसन्ति ॥ १ ॥
सा पुण्यभूमिर्बहुपूजनीया सम्माननीया बहुमाननीया ।
यत्रावसन् वेदविदां वरिष्ठाः गर्गान्ववायार्णवरत्नभूताः ॥ २ ॥
तत्राधिगोरक्षपुरं पवित्रग्रामेऽग्रजाह्लादिनि मामखोरे ।
बभूव शुक्लो हरिवंशनामा जात्याक्रियाभिर्वरबोधकीर्त्या ॥ ३ ॥
तटं सरय्वाः प्रविलङ्घ्य धीरस्ससमागतष्टेकनरायराज्ये ।
तत्रागतः पण्डितवादिमुख्यैश्शास्त्रार्थचर्याविजयं समाप ॥ ४ ॥
भूपेन तुष्टेन समर्चितोऽभूद् भूम्यादिभिष्टेकनरायनाम्ना ।
उवास सद्वेश्म विधाय तत्र विद्वद्वृतो वाक्पतिनिर्विशेषम् ॥ ५ ॥
विबुधवारणवारणकेशरी विविधशास्त्रविचारपरायणः ।
सुकुलपट्टिपुरे महितस्ततो हरिहरोऽजनि देवगुरुर्यथा ॥ ६ ॥
तस्यैव वंशेऽखिललोकमान्ये बभूव विश्वेश्वरदत्तशुक्लः ।
सत्तन्त्रविद्याप्रवणैकमान्यो वादेषु योऽभूच्च शतावधानः ॥ ७ ॥
जातस्ततो लोकसमर्चिताङ्घ्रिश्श्रीयुक्तरामेश्वरदत्तसूरी ।
यश्चात्मनीनां क्रमलब्धविद्यां भेजे तया कीर्तिमथाद्वितीयाम् ॥ ८ ॥
दीप्यद्धीनकछेदरामसविधे शास्त्रार्थचिन्तापरः
श्रीचिन्तामणिमन्त्रचिन्तनफलत् सारस्वतोद्यन्महाः ।
राज्ञो यो 'बडकादिपण्डित' इति ख्यातोऽर्चनामाप्तवान् ।
श्रीमद्राजकुमारवंशतिलकाद् रुद्रप्रतापादिह ॥ ९ ॥
तस्यैव राज्ये दियराभिधाने ग्रामेऽग्रजालंकृत आठडीहे ।
अध्यापयँश्छात्रगणानुवास वस्त्रान्नदानैः परितोषमाप्तान् ॥ १० ॥
ततोऽभवत् पण्डितमण्डलीशो विपत्तमन्देहविमर्दसूर्यः ।
यो सूर्यनारायणलब्दसंज्ञो यथार्थनामाप्रसरत्सुधामा ॥ ११ ॥
पदे प्रमाणेऽखिलवाक्यतन्त्रे विपक्षधीलब्धमहायशःसु ।
वाराणसेयेषु समागतेषु जयेच्छया पण्डितमण्डलेषु ॥ १२ ॥
जिता वयं शुक्लमहोदयेन महार्हचिन्तामणिचिन्तकेन ।
वाग्देवताप्राप्तवरेण शश्वत् प्रवाद एष प्रससार भूयान् ॥ १३ ॥
ततोऽभवच्छास्त्रभृतां वरेण्यः श्रीरामगोविन्द इति प्रसिद्धः ।
सच्छास्त्रचिन्तामणिचिन्तनोत्कः सत्प्रातिभं ज्योतिरिवावतीर्णः ॥ १४ ॥
तेन तेने प्रकाशोऽयं मुक्तावल्याः प्रकाशकः ।
प्रत्यक्षखण्डपर्यन्तं तेन तुष्यतु शङ्करः ॥ १५ ॥

## प्रत्यक्षखण्डे प्रश्नाः

सन् १९३३

१ गुणवदवृत्तिधर्मवत्त्वं निर्गुणत्वमितिवत् क्रियावदवृत्तिधर्मवत्त्वं निष्क्रियत्वमित्यस्यापि सुवचत्वसम्भवे पदार्थविभाजकोपाधिमत्त्वस्य निष्क्रियत्वघटकत्वे का युक्तिः ? — १०

२ अभावानामधिकरणात्मकत्वे, कालात्मकत्वे, ज्ञानात्मकत्वे वा ये ये दोषास्ते प्रदर्शनीयाः । — १०

३ अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यत इति कारिकाया विश्वनाथरीत्या व्याख्यानमाख्यायताम् । — ५

४ परमाणूनामनित्यत्वाभ्युपगमे को दोषः ? को वा परमाणुसमूहस्य घटादिस्वरूपत्वे दोषो भवतामभिमतः ? — १०

५ इन्द्रियजन्यं ज्ञानं प्रत्यक्षमिति लक्षणं परित्यज्य ज्ञानाकरणकं ज्ञानं प्रत्यक्षमित्यभिधानस्य किं तात्पर्यम् ? — ५

६ निर्विकल्पकज्ञानस्याप्रत्यक्षत्वे का युक्तिः ? का वा तेषामनभ्युपगतौ क्षतिः सम्भवति सा निरूपणीया — १०

सन् १९३४

१ एवं च तत्तत्कालीनतत्तद्भूतलादिकं तत्तदभावानां सम्बन्ध इति विश्वनाथः । क आशयोऽस्य ग्रन्थस्य । का चाऽत्र प्रतिपदव्यावृत्तिः । — १०

२ तुरीतन्तुसंयोगे पटाऽसमवायिकारणत्वाऽऽपत्तिः कथं वारिता विश्वनाथेन । एवं तुरीतन्तुसंयोगस्य पटाऽसमवायिकारणत्वे इष्टापत्तौ को दोषः । — ८

३ परमाणुपुञ्जाऽतिरिक्ताऽवयविस्वीकारे का वाचोयुक्तिः । — ८

४ 'शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः' इति पद्यं व्याख्याय इन्द्रियाणामात्मरूपत्वं निरसनीयम् । — ८

५ प्रतिपदव्यावृत्तिप्रदर्शनपुरःसरमिन्द्रियलक्षणं प्रतिपादनीयम् । इन्द्रियत्वं जातिः कथन्नेत्यपि समाधीयताम् । — १०

६ योगजसन्निकर्षः कतिविधः । — ६

## मध्यमा परीक्षोपयोगी ग्रन्थाः-

**का० मुक्तावलीतत्त्वालोक**—( मुक्तावली-प्रश्नोत्तरी ) ॥)

**कुमारसंभव**—'पुंसवनी' संस्कृत-हिन्दी टीका, परीक्षोपयोगी १-४ सर्ग २)

**चन्द्रालोक**-'पौर्णमासी' 'कथाभट्टी' संस्कृत-हिन्दी टीका प्रस्तावनादि सहित २)

**अभिज्ञानशाकुन्तल**—प्रो० कान्तानाथ शास्त्री एम. ए. सम्पादित नोट्स, शाकुन्तल समीक्षा आदि से सुसज्जित 'किशोरकेलि' संस्कृत हिन्दी टीका ६)

**चन्द्रप्रभचरित**—'मणिप्रभा' संस्कृत-हिन्दी टीका समालोचनादि सहित ।≈)

**रघुवंश**—मल्लिनाथी-सुधा संस्कृत-हिन्दी टीका सहित। सर्ग १ तथा ५ १॥)
१-२ सर्ग १॥) २-३ सर्ग १॥) २-४ सर्ग २।) १-५ सर्ग ३)

**रघुवंश**—मल्लिनाथी तथा 'मणिप्रभा' संस्कृत-हिन्दी टीका संपूर्ण ४), ५)

**किरात**—मल्लिनाथी तथा परीक्षोपयोगी-सुधा संस्कृत-हिन्दी टीका १-२ सर्ग १।)

**किरात**—मल्लिनाथी तथा 'प्रकाश' संस्कृत-हिन्दी टीका सहित संपूर्ण ३), ४)

**संस्कृत रचना प्रकाश**—प्रो० रमाकान्त द्विवेदी एम० ए० मध्यमा परीक्षा निर्धारित हिन्दी से संस्कृत और संस्कृत से हिन्दी अनुवाद का ग्रन्थ १।।।≡)

**मध्यकौमुदी**—सुधा-इन्दुमती संस्कृत-हिन्दी टीका, नोट्स, सहित ६)

**मध्यकौमुदीरहस्य ( प्रश्नोत्तरी )**—परीक्षोपयोगी नवीन संस्करण २)

**भट्टिकाव्य**—चन्द्रकला-वियोतिनी संस्कृत-हिन्दी टीका परिशिष्ट सहित
१ से ११ सर्ग ७) १२ से २२ सर्ग ५)

**दशकुमार**—'बालबोधिनी' संस्कृत-हिन्दी टीका पूर्वपीठिका १।) सम्पूर्ण ५॥)

**काव्यमीमांसा**—'मधुसूदनी' टीका संपूर्ण ३) चन्द्रिका' टीका १-५ अध्याय ।।।≈)

**अलङ्कारसारमञ्जरी**—मध्यमा निर्धारित १६ अलङ्कारों का पाठ्य ग्रन्थ ।≡)

**व्युत्पत्तिप्रदर्शन-गूढाशुद्धिप्रदर्शन**—नवीन परिष्कृत संस्करण ॥)

**प्रबन्धपारिजात**—मध्यमा परीक्षानिर्धारित संस्कृत निबन्ध ग्रन्थ १।)

**राष्ट्रभाषा सरल हिन्दी व्याकरण**—हिन्दी व्याकरण का सर्वोत्तम ग्रन्थ १।)

---

प्राप्तिस्थानम्—श्रीहरिकृष्णनिबन्धभवनम्, बनारस-१